२। प्रस्तुति काली कराली मनोजवा सुलोहिता
४। कुडव सुधूम्रवर्णा स्फुलिंगिनी विश्वरु
१६। प्रस्थ सारव्या: सप्तवह्नेर्जिह्वा:॥
६४। आढक त्रिषुवर्णेषु दातव्या विद्मवे पाक
२५६। द्रोण भोजनम्॥ खराडाज्यादिकृतं पा
५१२। सूर्प कनदुब्धेच्छूद्रजन्मनाम्॥ १॥

दैवे पितृश्राद्धे तु आशौचं जायते यदा॥ आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं विधीयते॥ १॥ तथा चाङ्गि:॥ तदहर्श्चेत्प्रदुष्येत केनचित्सूतकादिना॥ सूतकान्तेतरं कुर्यात्पुनस्तदहरेव चेति॥ २॥ पुनरुत्तरमासितेस्मिन्नेव दिवसइत्यर्थः॥ निमंत्रितेषु विप्रेषु आरब्धे श्राद्धकर्मणि॥ निमंत्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥ ३॥ देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्॥ भोजनाद्वेतु संभुक्ते विप्रे दोनुर्विपद्यते॥ यदा कश्चित्तदोच्छिष्टशेषं हित्वा समाहितः॥ आचम्य परकीयेन जलेन शुचयो द्विजाः॥ आशौचापहते स्तु मासिकविधेरशौचं च पौलत्यये॥ शेलो चोत्तरमासितद्दिनममावास्यासिते कादशी॥ श्राद्धे विप्रनिमंत्रणात्परमुतारंभाच्च पाकादितोमत्योजन्मानि च मृते ऽन्यग्रहणे नाशौचदोषो भवेत्॥ इति निर्णयकालदीपिकायां॥

अथ -

पुस्तककाश्मराडपानिर्णयप्:

१

श्रीगणेशायनमः अथद्रव्यमानंयाज्ञवल्क्यः जालसूर्यमरीचिस्थंत्रसरेणुरजः
स्मृतम् तेष्टौलिक्षास्तुतास्तिस्रोराजसर्षपउच्यते गौरस्तुतेत्रयः षट्तेयवोमध्य
स्तेत्रयः कृष्णलः पंचतेमाषस्तेसुवर्णस्तुषोडश पलंसुवर्णाश्चत्वारः पंचवापि
प्रकीर्तितम् द्वेकृष्णलेरूप्यमाषोधरणंषोडशैवतैः शतमानंतुदशभिर्धरणैः
पलमेवतु निष्कः सुवर्णाश्चत्वारइतिधरणिपुराणोपर्यायो तथांशतमानंजै
नेपूर्वोक्ताश्चत्वारः सुवर्णाराजतोनिष्कइतिकार्षिकस्ताम्रिकः पणइतिताम्रस्योन्मा
नम् पलचतुर्थांशेनकर्षः पणोऽन्निमितः कार्षिकास्ताम्रसंबंधीपणोभवति कर्ष पणः
संज्ञास्त्वनिर्दिष्टेति षोडशमाषः कर्षोसौ पलंकर्षचतुष्टयमितितेषोडशमाषाः षो १

उक्ताः सर्षपकर्षाद्यर्थाः कर्षपणसंज्ञश्च कार्षापणश्च नारदेनोक्तः कर्षापणस्त
क्षिणस्यां दिशि रोप्यः प्रवर्तते पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु स्यात्सेतर
पि षोडश पणपुराणः पणो भवेत् काकिणी चतुष्केण पणः ते च चतुर्भिर्वराटकैः
काकिणी चैकेति तथा च देशादिभेदेन पणादिव्यवहारो ज्ञेयः अथ धान्यादिमा
नं भाविष्ये पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् चतुर्भिः कुडवैः प्रस्थः प्रस्था
श्चत्वारः आढकः आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः कुंभो द्रोणद्वयं शूर्पः
खारी द्रोणास्तु षोडश द्रोणद्वयस्य सूर्पः इति संज्ञा गोपथे पंचपलमलकोमा
षस्तैश्चतुर्भिः पलैः पलैर्द्वात्रिंशद्भिः प्रस्थो मागधेषु प्रकीर्तितः आढकस्तैः

चतुर्भिश्च द्रोणैः स्यात्खारी चतुराढकः ॥ विद्भिर्धर्मज्ञैरेकपलं चकुडवः प्रस्थः आढको द्रोण एव च ॥ धा
न्यमानेषु बोधव्याः क्रमशो मी चतुर्गुणाः ॥ द्रोणैः षोडशभिः खारी विंशत्या कुंभ उच्यते ॥ कुं
भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता ॥ विंशत्यैस्मत्र द्रोणैरिति संवध्यते ॥ तथा च कुं[illegible]द्रोणद्वय
मिति पक्षाद्विंशति द्रोणमितः कुंभ इति पक्षांतरम् ॥ पलसहस्रमितः कुंभ इत्यपि पक्षांतरं ज्ञे
यम् ॥ वाराहे ॥ पलद्वयं तु प्रसृतं मुष्टिरेकपलं स्मृतम् ॥ अष्टमुष्टि भवेत् किंचित् किंचिद
ष्टौ तु पुष्कलम् ॥ पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोण इ
त्येतन्मानं लक्षणम् ॥ एतत्पक्षाणां शक्ति देशकालेषु पक्षया व्यवस्था उक्ता श्री नील
कंठाख्यैः परिभाषादिकं पुरः दानाद्योपयिकं कुंडमंडपादि वदित्यर्थः ॥ तत्र भूमाने ॥ आदित्य
पुराणे ॥ जालांतरगते भानौ यत् सूक्ष्मं दृश्यते रजः ॥ प्रथमं तत्प्रमाणानां त्रसरेणु
प्रचक्षते ॥ त्रसरेणुस्तु विज्ञेयो अष्टौ ये परमाणवः ॥ त्रसरेणवस्तु ते अष्टौ रथरे
णु

मध्यमया तोकरोष्ठाप्यनामया कनिष्ठया वितस्तिस्तु द्वादशांगुलमानिकः रत्निस्त्वंगुलपर्वाणि विज्ञेयस्त्वेक विंशतिः
चत्वारिंशतिश्चैव हस्तः स्यादंगुलानि तु किष्कुः स्मृतो ५

णुस्तु स स्मृतः ॥ रथरेणवस्तु तेष्टौ च वालाग्रं तत्स्मृतं बुधैः ॥ वालाग्राष्टकं लिक्षा नु यू
कालिक्षाष्टकं तथा ॥ अष्टौ यूका यवं प्राहुरंगुलं तु यवाष्टकं ॥ स्वल्पत्वेपि यूकाष्टकं यवं ॥
प्राहुर्यवानामुदरस्तथा ॥ अष्टभिस्त्वांगुलं तिर्यक्कृप चानामुत्तमं मतं ॥ सप्तभिर्मध्यमं
प्रोक्तं षड्भिः स्यादधमांगुलमिति ॥ द्वादशांगुलमात्रो वै वितस्तिः परिकीर्तिता ॥ अं
गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते ॥ तालः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदंगुलः

रान६ षण्णवत्यंगुलिश्चैव धनुर्दण्डः प्रकीर्तितः ॥ धनुर्दण्डयुगं नालिर्ज्ञेया ह्येते यवांगुलैः ॥ धनु
५ त्रिक्षि र्द्वात्रिंशतं नल्वं माहुः स्म्याद्विदोजनाः ॥ धनुः सहस्रे द्वे चापि गव्यूतिरपिदृश्यते ॥ अष्टौ
धनुःसहस्राणि योजनं परिकीर्तितं ॥ विष्णुधर्मोत्तरे ॥ यदुत्पन्नमथाश्नाति नरः संव
त्सरं द्विजः ॥ एकगोचर्ममात्रं तु भुवः प्रोक्तं विचक्षणैः ॥ बृहस्पतिः ॥ दशहस्तेन दंडेन त्रिं
शद्दण्डा निवर्तनं ॥ दशतान्येव गोचर्म प्राप्तेरोऽम्योदद्वातिजैः ॥ सिद्धान्तशेखरे ॥ मानां
न्येवांगुलेन हस्तः स्यात्कुण्डमाने शिवेरितः ॥ माध्यमांगुलिमध्यस्य पर्व दैर्घ्येण

शिव ३

चोक्तमं।। मात्रांगुलेन मानेन मामेखलो कंठनाभयः।। कर्तव्यं कुंडयोनिष्वेति इति भू
मानं।। मार्जनेखननाद्यन्ततमग्रकोरेण यथोचितं भूमिः संशोध्य तत्र मंडपस्थलं।।
सिद्धांतशेखरे स्थलादर्कां १२ गुलोच्चं मंडपस्थलमीरितं।। मंडपं वक्ष्ये पिलपचरा
यो हस्तमानं स्यात् समुसमं चसुशोभनमिति।। दंडत्रयनिर्मिते दीर्घत्रिकोणाकारयं
त्रे दंडाग्राभ्यां भुवि न्यस्ते यंत्रमूलोतिर्यग्दंडोपरि लेखितमध्यो भारवद्भूमिमप्राप्तं सू
त्रं यथा तिर्यग्दंडमध्यचिह्नमेतत् तथा निम्नोन्नभूः पूर्वोच्चा वा खननीयेत्यादि शिल्पशा
स्त्ररीत्या तां समीकुर्यात्।। एवं लब्धोराससे पुक्षेत्रे सम्यक् समीकृते।। दिक्साधनाय
तन्मध्ये समं मंडलमालिखेत्।। पूर्वोक्तलब्दाग्रशंकुं तन्मध्ये स्थापयेत्ततः।। तच्छाया
तिस्पृशेघत्र वृत्ते पूर्वापराह्णयोः तत्र कार्यौ बुभौ वहुः पूर्वोऽपररेखयोः।। अथ यमर्थः
समायां भुवि द्वादशांगुलाधिकव्यासार्द्धमेकं तन्मध्ये चापरं नवांगुलव्यासार्धमिति वृ

उपच्छ्र

एपः ३

चमंडपार्थं पघुका प्राचीं साधयेदेवं तदाह मदनरत्ने नारदः ४

नद्धयंछित्वा तन्मध्ये द्वादशांगुलं पृथुमूलं सूक्ष्माग्रमृजुं शंकुं निधाय नवांगुलव्यासरेखायां च
तस्यो दिशः स्मृता सुचंन सा सो मध्याद्यं च द्वादशांगुलाः शं लाकाः शंकू यस्वच्छाग्राः स्थाप्याः
शंकुशमनतार्थं तादृशं शंकुमग्रछाया च महच्छायारेखा पूर्वाह्णे यत्र न स्पृशति सा प्राक् यत्रा
पराह्णे सा प्राक् ॥ सूक्ष्मा प्राची ज्ञानार्थं तु परदिने पि तस्मिन्नेव वृत्ते शंकुछायानिर्गम
प्रवेशयोश्चिह्नं कृत्वा पूर्वापरदिनछायानिर्गमनचिह्नयोरंतरालमिष्टे स्त्रि चतुरादी
भागैर्विभज्य पूर्वदिनछायाप्रवेशनिर्गमांतरालघटीः पादछायाघटीयंत्रादिना
ज्ञात्वा ताभिर्घटिकाभिः कल्पितान् भागान् गणयेत् षष्टिभिश्च हरेत् ततो लब्धांशे
न प्रा-च्या प्रा-च्यमेव पूर्वदिनछायापगमचिह्नाद्गुणरायणउत्तरस्मिन्दक्षिणायने
दक्षिणस्मिन्नंकयेत् ॥ तदुपरि पूर्वछायाप्रवेशचिह्नोपरि च बध्नते सूत्रे सूक्ष्मा प्रा
ची भवति दिक्सौ पायां तरं च भुल्भोक्त निकप्रवणः पुष्यं चित्रा स्वात्मोर्ये हनरं एतनत्रा

त

शिव
४

चादिशोरूपंप्रयुगमात्रोदितेसतीतिग्प्रत्रैयंत्रसूपदेशः॥ अन्वीसूक्ष्मारंध्रांनलिकांका
ष्ठादेवध्यात्रदृष्ट्वेनेयुगमात्रमुपरिगतेध्रुजिकादिनदे त्रंदष्ट्वानलिकांताभ्यांप्राकृप्रूम
कूदेशयोः सूक्ष्मंपाषाणादावमवलंबद्वयंवाभूमौप्रदिष्य॥तन्निहूयोःप्राचीसूत्रंदेयमि
ति॥एवमेवध्रुवंदृष्ट्वोदीचीसाध्या॥चित्रास्वातिमध्यगतस्तज्ञानार्थंतुनलिकाद्वयेनैकेनचै
६ कोन्तरेणचस्त्राकारदंडत्रयं कृत्वादंडंचमध्येकयेत॥नलिकाद्वयांतेनतुजयान्तरेणादिनापर
स्परंयोजनीयौ॥ययथैकेनैव प्रयत्नेनयुगपन्नेत्रद्वयमपिदृश्यते॥एवंदृष्ट्वामिलि
सि
तानूलिकाद्वयांतादंडमध्यांकास्वपाषाणाववलंबौवापसे[illegible]प्याविति॥अथमंड
पादिलक्षणंतत्रपंचरात्रे॥कनीयांस्तःस्यान्मध्यमोष्ठादशोन्मितः॥तथाषोडश
भिर्हस्तैमंडपःस्यादिहोत्तमः॥प्रतिष्ठासारसंग्रहे॥मंडपःसकलाहस्तैःसर्वलक्षण
संयुतः॥दशद्वादशहस्तोवावृद्धिक्रमात्ततःक्रमात्॥लिंगपुराणे॥तुलापुरुषदान
प्रकरणेविशद्वस्ताप्रमाणेनमंडपंकूटमेववा॥अथाष्टादशहस्तेनकलाहस्तेनवापुनः॥

ए.म.
४

मध्ये २ प्रत: २

इति वचनेन तुलादानादौ षोडशाष्टादशाविंशतिहस्ता मंडपा [वि १] कल्पनीयाः॥ मध्ये स्तंभव
लिकोपरि गतैश्चतुर्भिरष्टाभिर्वा मृदंगाकारकलशप्रोतैः काष्ठैः शिखराकारं(तैः) कूटं॥ कूटो
स्त्रीशिखरं शृंगमित्यभिधानानुसारात्। मध्यस्तंभोपरि समंतयाच्छादितो मंडपः॥ इ
ति हेमाद्रिः। संप्रति तु कूट एवादनो लोकानां तत्रैव च मंडपभ्रमः॥ दशहस्तमंडपस्तु एकमे
खलं कुंडपक्षे एकाग्निविधानपक्षे वोपयुक्तो भवति। इति मदनरत्ने॥ पंचरात्रे॥ कुर्या
द्विस्तवयागेषु चतुर्द्वारान्सुमंडपान्॥ सारदारुमयस्तंभान्दृढान्कुर्यादृजून्समान्॥
मंडपार्द्धेष्ठितान्वेदसंख्याश्चूडान्वितांस्तथा॥ वलिकामुद्धितस्तेषां स्तंभहाद्दकं पुनः

स्थितान्वृद्धिः

वाह्यपीठप्रमाणेन तत्र सूत्रं विधानतः॥ कल्पयेद्द्विकरं द्वारं चतुरं त्रलवद्धितः॥ मध्य
मोत्तमयोर्वेदी मंडपस्य त्रिभागतः॥ चतुर्थीशोच्छ्रितिस्तस्यास्त्रिसप्तपंचतोपि वा॥ न
वेकादशहीनेन वा इष्टकाभिः प्रकल्पयेदिति॥ चूडाशिखाचूलिकाभिरिति येषां चतुस्त

द्वादशांगुलवृद्धिः ३

मध्य २

शिव ५ | नि १

भानां शिखाभिः प्रोतछिद्राणभयतः ॥ छिद्रद्वयोपेतानि वलिकाख्यानि तिर्यक्काष्ठानि विधेयानि त्यर्थः ॥ वाग्हस्तादि आदौ स्तंभचतुष्टयं विन्यस्य तद्बाह्यपरिधौ मंडपक्षेत्रविस्तारपर्यायपीठपरिमितसूत्रत्रितीयांशेन तुल्यान्तरद्वादश चिह्नकरणपूर्वकं पंचहस्तप्रमाणानि द्वादश स्तंभानि खेयानि त्यर्थः ॥ तदेवं षोडश स्तंभता संपद्यते ॥ तेषु चत्वारो मंडपायामाद्द्विमितो छ्राया अष्टहस्ता नवहस्ता वा भवंति ॥ अथ समभध्यमोत्तमरूपे ष्वष्टहस्तादितेचत्वारः ॥ शारदातिलके षोडशस्तंभसंयुक्तं चत्वारस्तेषु मध्यगाः ॥ अष्टहस्तसमुच्छ्रायाः संख्याया द्वादशमिताः ॥ पंचहस्तप्रमाणास्ते निछिद्रौ जैव सुभाः तत्रापि मध्यमस्तंभे चूडास्वर्वाति र्यक्काष्ठानि वेशनं वा त्व चूडासु स्तंभकरोत्तुवेत्सनियमः ॥ सर्वे च ॥ पंचमांशक स्वसेद्भोसर्वसाधारणो विधिरित्युक्तत्वात् ॥ सूत्रपंचमांशेन बानि खेयाः सर्व पिदशांगुलसूत्रवेष्टयोग्यस्थोल्या विधेयाः ॥ कल्पयेदित्यादि कनिष्ठमंडपद्वारचतुष्टयं द्विहस्तविस्तारं ॥ एवमुत्तमेऽष्टांगुलाधिकद्विहस्तविस्तारम् ॥ मध्यमो

नेषु ४ | यम: ५

नेर मध्यमे चतुरंगुलाधिकद्विहस्तविस्तारः ॥ १

४पद्मद्विः

नमयोर्वेदीस्यादिमंडपमध्यत्रिभागमानावेदिः॥ स्यायामन्तृतीयचतुर्थपंचमसप्तनव
मेकादशांश्यत्तमांशेनोच्चा॥ तुलापुरुषेतुमात्स्ये॥ सप्तहस्ताभवेद्वेदीमध्येपंचकराथवा॥
इतिसिद्धांतशेखरे॥ चतुरस्राचतुःकोणावेदीसर्वफलप्रदा॥ तडागादिप्रतिष्ठायांपद्मि
नीपत्रसन्निभा॥ राज्ञांस्यात्सर्वतोभद्राचतुर्भद्राभिषेचने॥ विवाहेश्रीधनीदेवीविश्व
स्यस्त्रसमन्विता॥ इति॥ द्वारदेहल्यावहिर्हस्तमात्रेद्वारशाखानिखेयाइतिनिबंधांतरे॥
व्रतखंडेतु॥ हस्तद्वयंवहिस्यक्तातोरणानिनिवेशयेदितिमात्स्ये॥ द्वारेषुकार्याणि
चतोरणानिचतुष्टयंक्षीरवनस्पतीनामिति॥ अयमर्थः॥ पूर्वद्वारेश्वत्थशाखं। दक्षिणे
उदुंबरशाखं। पश्चिमेप्लक्षशाखं। उत्तरेतोवटशाखं। तदुक्तंविश्वकर्मवास्तुशास्त्रे॥ अ
श्वत्थोदुंबरप्लक्षवटशाखाकृतानितु॥ मंडपस्यप्रतिदिशंद्वाराणेपनानिकारयेत्॥ पंच
हस्तप्रमाणेस्तुविस्तारेणद्विहस्तकाः॥ षडंगुलाभिवृद्धास्तुसप्तहस्तायथोच्छ्रये॥
विस्तारस्तोतितिर्यक्फलकमानम्॥ तोरणस्तंभान्यधिकृत्यशारदातिलके॥ दशां
गुलप्रमाणेनतत्पारिणाहईरितम्॥ परिणाहोविशालता॥ शाखास्ताधममध्यमो
त्तमाम्रणुपंचषट्सप्तहस्तोच्चास्तासामुपरिष्ठेन चूडासुतिर्यक्फलमुभयत

तमेद्वि ७

शिव
६

स्तच्छिद्रं चूडान्यस्तच्छिद्रं निदध्यात्॥ तद्द्विहस्तं मध्ये मण्डपे त्र्यंगुलवङ्क्षाधिकं द्विहस्तं मध्ये
सार्द्धहस्तद्वयमुन्नतमिति मध्ये फलकोपरि मध्ये मण्डपेषु क्रमाच्चतुरंगुलाः सार्द्धचतुरंगुलाः
पंचांगुलाश्च कीला निवेश्याः॥ तिर्यक्फलककीलाश्च तन्नेत्तत्काष्ठजा एव॥ यद्वा स्तुशा
स्त्रे॥ मस्तके द्वादशांशेन शंखचक्रगदाम्बुजम्॥ प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजं।
द्वादशांशेत्र फलकस्य चतुरंगुलादिरेवोक्तः॥ शंखचक्रगदाम्बुजाकारकरणं वैष्णवया
गविषयम्॥ शैवयागे तु तत्कीलास्त्रिशूलाभाः सुस्त्रिशूलकारत्वचैवं मध्यकीलो नवां
गुलोच्छ्रितः सपादद्व्यंगुलविस्तारस्तत्र गुन्त मुभयतो सौ किंचिद्वक्रो दैर्घ्ये मध्ये शूलस्यमू
लांगुलद्वयं बिले प्रविशति॥ इत्यधममण्डपे॥ मध्यमे त्वेकादशांगुलमुच्छ्रायः पादोनत्र्यं
गुलविस्तारस्त्र्यंगुलो बिलप्रवेशः॥ उत्तमे त्रयोदशांगुलमुच्छ्रायः सपादत्र्यंगुलो वि
स्तारश्चतुरंगुलो बिलप्रवेशः॥ इदं च पिंगलमते॥ शूलेन विहिताः कार्या द्वारशाखासु
मस्तके॥ शूले नवांगुलैर्दैर्घ्ये तुरीयांशेन विस्तृते॥ ऋजुं वै मध्यमं शृंगं स्यात्किंचिद्वक्रे
च पक्षयोः॥ प्रथमं तत्समाख्यातं द्व्यंगुलं रोपयेत्तथा॥ इत्यादिनोक्तम्॥ एषामलाभे ए
कवृक्षजानि तोरणानि तस्याप्यभावे शमीद्रुमजान्येतन्निवेशनमंत्राश्चाग्निमीळे इत्ये
ले१

रामः
६

वीतये १ ८२

त्वो ऊँ

त्वास्त्रतस्त्रायाहिँग्लोदेवीरित्यनुसंधेयाः॥ मध्यास्तंभचतुष्टयोपरिचमुरजाकृतिकाष्ठेदि
ग्विदिग्गतं रथाष्टकप्रोतायत्काष्ठाष्टकेनोन्नताकार्या॥ कटैः संमिस्तु संघाघा विजयाघा स्तु
मंडपाद्युत्तमोत्तमा॥ द्वारवर्जं सर्वतो मंडपस्याच्छाद्यः॥ जयविजयभद्रविश्वरूपध्रुवधन
दत्वकसुप्रसन्नाः। एते ऽष्टहस्तादयो द्विहस्तवृद्धितो ज्ञातव्याः॥ यदा मंडपद्वयं क्रियते तदा
तत्र प्रथममंडपपरिमितमंतरमुत्सृज्य द्वितीयो मंडपः कर्तव्य इति वास्तुशास्त्रे॥ एवं यदा धा
मान्ये मंडपः क्रियते तदा तच्छालापरिमाणमंतरमुत्सृज्य परतो मंडपो विधेयः इति मा
त्स्ये॥ मंडपपताकाद्युक्ताः। लोकेशवर्णाः परितः पताकामध्ये ध्वजः किंकिणिकायु
तः स्यादिति सिंग्रहे॥ सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः॥ लोकपालानुव
र्णेन नवमी तु हिमप्रभा॥ पीतरक्तादिवर्णाश्च पंचहस्ता ध्वजाः स्मृताः॥ द्विपंचह
स्तैर्दंडैश्च वंशजैः संयुतास्तथेति॥ लोकपालवर्णाः। इंद्रः पीतो यमः श्यामो वरुणः
स्फटिकोपमः॥ कुबेरश्च सुवर्णाभो ह्यग्निश्चापि सुवर्णभः। तथा निर्ऋतिः श्यामो वा
युर्धूम्रः प्रशस्यते॥ ईशानस्तु भवेद्रक्तः एवं ध्यायेत्क्रमादिमान्॥ गारुडे तु पताकानां
प्रकारांतरमुक्तम्॥ पंचहस्ता ध्वजाः कार्या वेणुल्पेन द्विहस्तकाः सप्तहस्ताः पताकास्यु

चे३

विंशत्यंगुलविस्तृताः दशहस्ताः पताकानां दण्डाः पंचांशवेष्टिताः सिंदूराः कर्बु
राधूम्राधूसरामेघसन्निभाः हरिताः पाण्डुवर्णाश्च शुभ्राः पूर्वादितः क्रमात् ए
वंवर्णाः शुभाः कार्य्याः पताकापाकशासनेति अत्रसमचतुरस्त्रंमण्डपादिमा
सत्रमाणंरज्जुंद्विगुणीकृत्यतामेवोभयतःपाशाभ्यांसहाष्टधाविभज्यपञ्चमांशा
न्तेकर्षणायषष्ठांशान्तेशंकर्षचिह्नद्वयंकृत्वामण्डपादेःप्राचीसूत्रप्रान्तद्वयेशंकुद्वयंनि
खायरज्ज्वन्तपाशौतयोःशंक्वोरासज्यकर्षणचिह्नं दक्षिणतआकृष्यशंकुचिह्ने श
कुंनिखायततःकर्षणचिह्नमुत्तरतआकृष्यशंकुचिह्नेशंकुनिखायप्रत्यासंकृत्वा
शंक्वोःपाशांतेवासज्यपूर्ववद्दक्षिणोत्तरयोःक्रमेणचिह्नेआकृष्यशंकुद्वयंनिख
न्यात्ततःईशानाग्नेयादिशंकुष्वाप्रादक्षिण्येनरज्जुवेष्टनान्मंडपादिरतुरस्त्रंक्षेत्रं
सिद्धंभवति मध्यवेदीसाधनं मण्डपसूत्रप्रागायतंदक्षिणोत्तरायतंचत्रेधा
विभज्यतेननवभागामण्डपस्यसम्पद्यन्ते मध्यमेनवमेंशेतन्मानावेदिका य
जमानहस्ताच्छ्रावाविधेया मात्स्ये द्वारेषुकुम्भद्वयमत्रकार्य्यंस्रग्गन्धधूपाम्बररत्नयुक्तमि

त्तिमद्दनरत्ने गन्धपुष्पाक्षतोपेतान्कुम्भांस्तेषु निवेशयेत् ध्रुवन्धरम्बाकूपतिञ्च विघ्नेशान्तेषु पूज
येत् मण्डपस्य तु कोणेषु कलशेषु क्रमादमी अमृतो दुर्ज्जयश्चैव सिद्धार्थो मङ्गलस्तथा पूज्या द्वा
रस्थ कुम्भेषु शक्राद्यास्तन्मनूत्तमैः मनुमन्त्रैः इति मण्डपनिरूपणम् अथ कुण्डानि त
त्र भविष्यपुराणे वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा वेदास्त्रारोपवर्तानि स्युर्वर्तुलान्यथ
वा क्वचित् आम्नायरहस्ये कुण्डानि चतुरस्राणि वृत्तनानाकृतीनि वा नव पञ्चाथ वैकं वा कर्त
व्यं लक्षणान्वितम् नवकुण्डविधाने तु दिक्षु कुण्डाष्टके स्थिते नवमं कारयेत् कुण्डं पूर्वेशानादिग
न्तरे विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेत् अत्र चतुःकुण्डीपक्षे ख्यातन्त्रास्तीत्युक्तं हे
माद्रौ नारदीये यत्रोपदिश्यते कुण्डं चतुष्कं तत्र कर्म्मणि वेदास्त्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभं त
था पीठवद्वर्तयेत्कुण्डं सुप्रमाणं स्वगर्त्तकम् कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः
कुण्डवेद्यन्तरञ्चैव सपादकरसंमितम् विंशाङ्गुलमत्र कर्त्तव्यमन्तरं कुण्डपीठयोः स्थापये
द्वेदिभित्तिं परित्यज्य त्रयोदशभिरङ्गुलैः हस्तमात्राणि कुण्डानि चतुरस्राणि सर्वतः
इति सर्वतोऽष्टदिक्षु काम्यं तु ऐन्द्र्यां स्तम्भे चतुष्कोणमग्नौ भागभगाकृतिम् चन्द्रार्द्धं मारणे
याम्ये त्रिकोणं तु वने आग्नौ वारुणे पाशान्तिके वृत्तं खण्डस्तम्भोच्चाटने निलेऽष्टाचापोऽष्टि
कपद्मं सौम्यां शान्तिमुक्तिदम् शारदातिलके विप्राणां चतुरस्रं स्यात्प्रागाद्यं वर्त्तुलमिष्यते

वेश्मानामर्द्धचन्द्राभं शङ्खानाञ्च समीरितम् चतुरस्रन्तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः चतुर
स्रसाधनन्तु मण्डपसाधनावसरे उक्तम् प्रकारान्तरमाह विश्वकर्म्मा कृत्वा प्राक्सूत्रमर्द्धाङ्कु
दक्षिणोत्तरं तस्यपयोः न्यस्य सूत्रन्ततः कोणेरङ्कितञ्चतुरस्रकम् तत्रैकस्मिन् हस्ते चतुर्वि
शत्यङ्गुलानि द्विहस्ते त्रयस्त्रिंशदङ्गुलानि सप्तयवाः चतस्रो यूकाः द्वे लिक्षे त्रिष्वेकच
त्वारिंशदङ्गुलानि चत्वारो यवाः चतस्रो यूकाः चतस्रो लिक्षाः चतुर्ष्वष्टाचत्वारिंशद
ङ्गुलानि पञ्चसु त्रिपञ्चाशदङ्गुलानि पञ्चयवाः द्वे यूके पञ्चलिक्षाः षट्स्वष्टपंचा
शदङ्गुलानि षट् यवाः द्वे यूके चतस्रो लिक्षाः सप्तसु त्रिषष्ट्यङ्गुलानि यवत्रयम् सप्तयू
काः सप्तलिक्षाः अष्टसु ~~सप्त~~ षष्ट्यङ्गुलानि सप्तयवाः चतस्रो लिक्षाः नवसु द्विसप्तत्य
ङ्गुलानि दशसु पञ्चसप्तत्यङ्गुलानि षट् यवाः यूकाश्चतस्रः लिक्षाश्चतस्रः एवं षोडशह
स्ते षण्णवत्यङ्गुलानि अथ योनिकुण्डम् इष्टचतुरस्रव्यासञ्चतुर्विंशतिधा विभज्य सपा
देः पञ्चभिर्भागैर्म्मध्यसूत्रं प्राच्यां संवर्ध्य चतुरस्रमध्ये प्रागुदक्सूत्रपातजातोपरितो ना
ल्पचतुरस्रयोः कोणसूत्रद्वयपातं ज्ञात्वा मध्यादेतत्कोणसूत्रार्द्धमानेनेष्टचतुरस्रोदक्
सूत्रदक्षिणान्तात् प्राक्सूत्रपश्चिमान्तं यावद्भ्रामयेद्वृत्तार्द्धम् एवमेवाल्पचतुरस्रेपि पाठ



परा१

चतुरस्रोदगन्तात्तत्राक्सूत्रपश्चिमांतंपरिभ्राम्यवृत्तार्द्धद्वयंदक्षिणोदक्कोटितोवर्द्धितप्राक्सूत्रां
तंयावत्सूत्रद्वयंपातयेदितियोनिकुण्डम् तथाचशारदातिलके चतुरस्रीकृतंक्षेत्रंपञ्चधा
विभजेत्सुधीः न्यसेत्पुरस्तादेकांशंकोणार्द्धार्द्धप्रमाणतः भ्रामयेत्कोणमानेनतथान्यद
पिमंत्रवित् सूत्रयुग्मन्ततोदद्यात्कुण्डयोनिनिभम्भवेत् अत्रोपपत्तिः प्राग्दिग्गतत्र्य
स्रलवः सप्तदशांगुलानि१७ एकोयवः एकायूकाःलिक्षाः८ पञ्चभूस्तु हस्तचतुरस्रमध्यादु
क्सूत्रेचतुर्विंशत्यङ्गुलमुपरितनाल्पत्र्यस्रेपिभूः सेवालंवस्तु द्वादशांगुलानिवृत्तार्द्धव्यासा
र्द्धयोस्तु अंगुलान्यष्टौ८ यवाश्चत्वारः४ इतियोनिमध्यसूत्रंवृध्यंगुलानि एकहस्तेप
ञ्चाङ्गुलानि एकोयवः एकायूकापञ्चलिक्षाः द्विहस्तेसप्तांगुलानिद्वौयवौद्वयूकुएका
लिक्षा त्रिहस्तेऽष्टावंगुलाःसप्तयवाःतिस्रोयूकाः चतुर्हस्तेदशांगुलानिचत्वारोयवाः
तिस्रोयूकाःद्वेलिक्षे पञ्चहस्तेएकादशांगुलानियवचतुष्टयमेकायूका षड्हस्तेद्वादशां
गुलानिचत्वारोयवाःसप्तयूकाःतिस्रोलिक्षाः सप्तहस्तेत्रयोदशांगुलानिपञ्चयवाः
अष्टहस्तेचतुर्दशांगुलानियवचतुष्टयंयूकाश्चतस्रः द्वेलिक्षे नवहस्तेपञ्चदशांगुला
नियवत्रयंयूकाचतुष्टयमसप्तलिक्षाः दशहस्तेषोडशांगुलानिद्वौयवौतिस्रोयूकाः

शि०प०
९

एवं षोडशहस्तविंशत्यंगुलानि यवचतुष्टयं षट्यूकाश्चतस्रो लिक्षाः रामस्तु इष्टचतुरस्रक्षेत्रमध्य
रेखाया द्विनवत्यधिकं शतमंशान्कृत्वा षट्त्रिंदशांशान्मध्यसूत्रं प्राच्यमेकोनविंशदंशाश्चाभयतः श्रो
णिसंज्ञकौ संज्ञौ श्रोणि चतुर्थांशं कर्कटेन सूत्रेण वा पश्चिमभागे वृत्तार्द्धद्वयं प्राक्पुच्छे श्रोणिसूत्र
लग्नं विलिख्य वृत्तार्द्धद्वयवाह्यप्रान्तयोर्वर्द्धितप्राक्सूत्रचिह्नं यावत्सूत्रद्वये न यो न्याकारं कार्यमित्या
ह तत्फलमसिद्धान्तशेखरे सवादपि विरूपकान्वाद्युक्तमिदं चोदगग्रं कार्यं मत्तश्च मध्यमरेखा पंचमां
शेन द्वावुदीच्यां कृतायां भवति इदमुदाहृतं मदनरत्ने सिद्धान्तशेखरे यान्याख्यमुच्यते कुण्डमाग्नेय्या
मुत्तरामुखमिति अथार्द्धचन्द्राभं तदुक्तं शारदातिलके चतुरस्रोत्कृते क्षेत्रे दशधा विभजेत्सुधीः एक
मंशं त्यजेद्दशामध्य ऊर्ध्वं च वितत्य वितत्य सूत्रपातयेदग्रतन्मानाद्भ्रामयेत्ततः अर्द्धचन्द्रनिभं कुण्ड
रमणीयमिदं भवेत् अयमर्थः इष्टप्रमाणचतुरस्रमध्यरेखां दशधा विभज्याधस्तिमो भागोपरिमु
ज्य तत्र चिह्नद्वयं कृत्वोपरिचिह्नेत्तिर्यक्दक्षिणोत्तरसूत्रं दत्वोपरिचिह्नादधश्चिह्नं यावद्वृत्तेन सूत्रेण
कर्कटेन वा धो भ्रमात् वृत्तार्द्धं ज्यास्त्रजातकोटिकमर्द्धचन्द्रकुण्डं कुर्य्यादिति अर्द्धेन्दो व्यासार्द्धांगुलानि
एकस्मिन्नेकोनविंशत्यंगुलानि एकोयवः एकायूका पंचलिक्षाः द्वयोः सप्तविंशत्यंगुलानि पञ्च
यूकाः द्वौ लिक्षे त्रिषु त्रयस्त्रिंशदंगुलानि एकोयवः द्वे यूके षट् लिक्षाः चतुर्षु अष्टत्रिंशदंगुला
नि द्वौ यवौ तिस्रो यूकाः द्वे लिक्षे पञ्चसु द्विचत्वारिंशदंगुलानि सप्तयवाः यूकाश्चतस्रः तिस्रो

रामः
९

लिक्षाः षट्सु षट्चत्वारिंशदंगुलानि सप्तयवाः द्व्यूके सप्तसु पञ्चाशदंगुलानि पञ्चयवाः द्व्यूके
चतस्रो लिक्षाः अष्टसु पंचपञ्चाशदंगुलानि एकोयवः द्व्यूके तिस्रो लिक्षाः नवसु सप्तपंचाश
दंगुलानि चत्वारो यवाः दशसु षष्ट्यंगुलानि चत्वारो यवाः एवं षोडसु षट्सप्तत्यंगुलानि पञ्चय
वाः अत्र रामेणतु चतुरशीत्यधिकत्रिंशत्याविभक्तस्य षष्टक्षेत्रस्य व्यासस्यैकोंशोधिकस्त्याज्यः क्षेत्र
फलसंवादार्थमित्युक्तम् सचैकोंश इष्टक्षेत्रव्यासस्य चतुर्विंशांशषोडशांशो भवति एकहस्तचतुर
स्रे तु सार्धयवपरिमितः एवं द्विहस्तादिष्वप्यूह्यम् इदं चोद्दगणकार्यम् तदुक्तं मदनरत्ने उद्दगृहं
चाद्दकमध्यरेखायां नवधा विभागेन संपादनीयमिति यत्तु कामिके चतुरस्रे यद्गृहे भक्ते न्यञ्चाघ्नो
तद्दशको मध्यसप्तांशमानेन कुण्डखण्डौ स्तु वन्भवेत् अत्र भूयान्क्षेत्रफलविसंवादः कामिको
क्तो विकल्पः अथ त्रिकोणाम् इष्टचतुरस्रमध्यसूत्रस्य चतुर्विंशतिरंशः तत्र सूत्रस्यैवंशा भ्यामष्टमा
शेनैकांशसहितान्सार्धसप्तान् अंशान् आदिशाश्च पार्श्वयोः प्रत्येकं संपादनात् षडंशात्सर्वथा वर्धि
तश्रोणापन्नयोर्वर्द्धितप्राक्सूत्रान्तयावत्सूत्रद्वये दत्ते समभुजत्र्यस्त्रिं भवति यथोक्तं शारदातिलके चतु
र्भमर्दितक्षेत्रेन्यसेदुभयपार्श्वयोः एकैकमंशं तन्मानाद्दग्रतो लांछयेत्ततः सूत्रत्रयं बुधः कुर्या
त्र्यस्रं कुण्डमुदाहृतमिति इदं तु किंचित्फलव्यभिचारि अतोस्माभिरधिकवर्द्धितस्त्रा रामम तेतु म
ध्यसूत्रं दशभिरंशैः संवर्ध्य तत्रैकांशः स्वाष्टमांशोनः श्रोणिसूत्रस्योभयतः पंचपंचाशद्वर्धितिर्धि

तत्तु विषमभुजत्वादुपेक्ष्यम् इदञ्च निम्नतो प्रागग्रपश्चिमयोनिम्नस्त्रिभुजाः एकस्मिन्षट्त्रिंशदंगुलानि चत्वारो यवाः द्वयोरेकपञ्चाशदंगुलानि पञ्च यवाः त्रिषु षष्ट्यंगुलानि एको यवः चतुर्षु त्रिसप्तत्यंगुलानि पञ्च स्वेकाशीत्यंगुलानि पञ्च यवाः षट्स्वेकोननवत्यंगुलानि त्रयो यवाः सप्तसु चतुर्नवत्यंगुलानि चत्वारो यवाः अष्टसु अष्टत्तरशतांगुलानि एको यवः नवसु नवाधिकशतांगुलानि यवत्रयम् दशासु पञ्चदशाधिकशतांगुलानि यवद्वयम् अथ वृत्तं कामिके करार्द्धाष्टांश सन्यासो वृत्तंकुण्डमिहोदितमिति अयमर्थः करार्द्धस्य यो अष्टमांशो ऽगुलद्वयं यवाधिकमेकहस्तेतस्य सम्यक् न्यासं त्यागः कृत्वा अवशिष्टयवेन्यून पञ्चदशांगुलात्मकव्यासार्द्धेन वृत्तकुण्डं भवति शारदातिलकेपि अष्टादशांशसंक्षेत्रेन्यसेदेकं वहिर्बुधः भ्रामयेत्तेन मानेन वृत्तं कुण्डमनुत्तमामिति अत्रोभयतापि क्षेत्रफलविसंवादो बोध्यः एकांशस्य पंचविंशत्यंशसहितव्यासषोडशांशाधिकव्यासार्द्धमितेन कर्कटेन सूत्रेण वा कृतमण्डलं वृत्तकुण्डं प्रागग्रपश्चिमयोनिम्नतो ऽत्र वृत्तव्यासार्द्धांगुलानि एकस्मिन्त्रयोदशांगुलानि यवचतुष्टयम् द्वयोरेकोनविंशत्यंगुलानि एको यवः त्रिषु त्रयोविंशत्यंगुलानि यवचतुष्टयम् चतुर्षु सप्तविंशत्यंगुलानि एको यवः पञ्चसु त्रिंशदंगुलानि द्वौ यवौ षट्सु त्रयस्त्रिंशदंगुलानि एको यवः सप्तसु पञ्चत्रिंशदंगुलानि स

अष्टस्वष्टत्रिंशदंगुलानि द्वौयवौ नवसु चत्वारिंशदंगुलानि पञ्चयवाः दशसु द्विचत्वारिंशदंगुलानि सप्त
यवाः अथ षडस्रम् इष्टचतुरस्रमध्यसूत्रस्य चतुर्विंशतिभागान्कृत्वा तत्सूत्रं त्रिभिरंशैः प्राच्यां वर्द्धय
त् तत्रैकोंशः स्वाष्टमांशोनस्तावत्प्रतीच्यां संवर्द्धनं दत्वा तं कृत्वा नाव नैव कर्कटेनोदीचीमारभ्य षट्
सु स्थानेष्वङ्कयेदिति अत्रैकहस्तेन तावदेवं फलम् मध्ये दीर्घश्चतुरस्रे तद्दीर्घभुजः पञ्चविंशत्यंगुला
नि षट्यवाः एवमन्योपि अल्पभुजस्तु चतुर्दशांगुलानि सप्तयवाः सप्तयूकाः तत्र पञ्चाशीत्यधि
कशतत्रयमंगुलानि चतुरस्रदीर्घभुजसंलग्ने त्र्यस्रे तु भुज एव भूः लंबस्तु तच्चतुर्थांशः सप्तांगु
लानि त्रयो यवाः पञ्च यूकाश्चेति तत्फलम् पञ्चनवत्यंगुलानि चत्वारो यवाश्च अपरत्र्यस्रे
प्येवम् फलत्रयस्य योगे पञ्चशतीषट्सप्ततिश्च यत्तु विश्वमूर्त्तिप्रभृतिवक्तृभिः फलसंवाद्या
पि त्र्यस्रद्वययोगेन बहिर्निर्गतास्त्वेकं षडस्रमुक्तम् तदयुक्तम् अन्तरवाह्यास्रयोगेन द्वादशा
स्रता द्वादशभुजतापत्तेः बहिः स्तनाख्यास्रा नान्तर्गता इति चेत् तथापि वक्रभुजतायामा
भुजत्वाच्चतुरस्रस्याहावपि फलसंवादे न कदाचित्तथापत्तेश्च एतेन रामोक्तमष्टास्रमपि प्र
युक्तम् षडस्रीभुजांगुलानि एकहस्तादिक्रमेण द्वादशहस्तपर्य्यन्तम् चतुर्दशांगुलानि
सप्तयवाः एकविंशत्यंगुलानि पञ्चविंशत्यंगुलानि षट्यवाः एकोनत्रिंशदंगुलानि षट्
यवाः त्रयस्त्रिंशदंगुलानि एकोयवः चतुश्चत्वारिंशदंगुलानि द्वौयवौ षट्त्रिंशदंगुलानि

यवत्रयम् द्विचत्वारिंशदंगुलानि एकोयवः चतुश्चत्वारिंशदंगुलानि १

शिवः
२१

यवचतुष्कम् एकोनचत्वारिंशदंगुलानि पञ्चयवाः सप्तचत्वारिंशदंगुलानि एकोयवः अथप
द्मम् इष्टचतुरस्रमध्यसूत्रस्य चतुर्विंशतिरंशाः तत्र द्वादशभिरंशैरेकं वृत्तं कृत्वा तदुपरि सार्द्ध
त्रीणि पंचांशान्सवर्द्ध्य अपरं कृत्वा तत्र दिक्षु विदिक्षु तदन्तरालेषु च सूत्राण्यास्फालयेत् ततो
ऽन्तर्वृत्तरेखाप्राक्सूत्रमत्स्यात्तदेकान्तरितमत्स्याच्च सूत्रद्वयं त्रिकोणाकारेणास्फालये
त् तदन्तरालमत्स्य समसूत्रं बहिर्वृत्तरेखागतमत्स्यं यावत् तत्रैकं सूत्रं समांशतया मध्ये
कृयित्वा सूत्रार्द्धमितकर्कटकोटिमकाञ्च मध्याङ्कपराञ्च सूत्रारंभकमत्स्यसंस्थाप्य त्रि
कोणमध्ये भ्रमणादेकं मत्स्यं बहिर्वृत्तगतरेखातो त्रिकोणान्तात् तस्मादेव च सूत्राकारात्
त्रिकोणाद्बहिरपरं मत्स्यं कृत्वा तन्मत्स्यात् त्रिकोणाद्बहिरुपरि सूत्रार्द्धज्याकम् एकं बहिर्मत्स्यात्त्रि
कोणान्तरधः सूत्रार्द्धज्याकमपरमिति संलग्नकोटिकमुपर्य्यधोभागेन धनुर्द्वयं कुर्य्यात् एव
मपरसूत्रेऽपि कृत्वा सूत्रद्वयमार्ज्जने चक्राग्रपद्मदलवत् पत्रं भवति एवमन्यान्यपि पत्राणि कृ
त्वा इष्टचतुरस्रक्षेत्रकल्पितचतुर्विंशत्यंगुलमध्ये त्रिभिरंशैर्व्यासार्द्धेन मध्ये तद्बहिश्च षडंशव्या
सार्द्धेनेति वृत्तद्वयं कार्य्यं तत्रान्तर्वृत्तविस्तारतद्वृत्तेनोच्चतायां तद्व्यासेन समामृत्कर्णिकाका
र्या बहिर्वृत्ते तु केशराः इति तथा च कामिके चतुरस्राष्टभागेन कर्णिकास्याद्द्विभागशः तद्ब
हिस्त्वेकभागेन केसराणि प्रकल्पयेत् तृतीयदलमध्यानि चतुर्थदलकोटयः भ्रामणात्पं
कजं कुर्यात्स्याद्दलाग्रं दशयेद्बहिरिति विभागशः सर्वदिग्भागेष्विति तत्पर्थः भ्रमणात्तत्रस्य तिर्य्यक्

राम:
२१

एकहस्ते चतुर्थं महद्वृत्तव्यासार्द्धं पञ्चदशांगुलानि पंचयवाः तिस्रोयूकाः तिस्रोलिक्षाः द्वेवालाग्रे
द्विहस्ते द्वाविंशत्यंगुलानि एकोयवः तिस्रोयूकाः एकलिक्षः त्रिहस्ते सप्तविंशत्यंगुलानि एकोयवः
एकायूका द्वेवालाग्रे चतुर्हस्ते एकत्रिंशदंगुलानि द्वौयवौ षट्यूकाः षट्लिक्षाः चत्वारिवालाग्रा
णि पंचहस्ते पञ्चत्रिंशदंगुलानि तिस्रोयवाः षट्लिक्षाः पञ्चवालाग्राणि षड्हस्ते अष्टत्रिंश
दंगुलानि यवत्रयम् एकायूका द्वेवालाग्रे सप्तहस्ते एकचत्वारिंशदंगुलानि यवत्रयम् सप्तयूकाः
अष्टहस्ते चतुश्चत्वारिंशदंगुलानि द्वौयवौ षट्यूकाः षट्लिक्षाः नवहस्ते सप्तचत्वारिंशदंगु
लानि द्वौयवौ तिस्रोलिक्षाः दशहस्ते एकोनपञ्चाशदंगुलानि पञ्चयवाः चतस्रोयूकाः सप्तलि
क्षाः एकंवालाग्रम् पञ्चरथरेणवः षट्त्रसरेणवः त्रयःपरमाणव इति भूश्च तृतीयवृत्तव
मांशस्यज्या हृत्पासाचेकहस्तादिक्रमेण दशहस्तांत नवांगुलानि एकोयवः तिस्रोयूकाः षट्लि
क्षाः चत्वारिवालाग्राणि द्वादशांगुला० १२ य० ७ यू० ७ लि० २ पंचदशांगुल० १५ य० ३ यू० १ लि० ७
वा० ४ अष्टादशांगु० १८ य० ३ यू० ३ लि० ४ वा० ६ विंशत्यंगुल० २० यव० २ यू० २ लि० ३ वा० द्वाविंश
त्यंगुलानि० २२ य० ३ यू० ७ लि० ६ वा० ६ चतुर्विंशत्यंगु० २४ य० २ यू० ३ लि० १ वा० २ पञ्चविंशत्यंगु० २५
य० ७ यू० ६ लि० ४ सप्तविंशत्यंगु० २७ य० ४ यू० २ लि० ३ एकोनत्रिंशदंगु० २९ य० १० लि० ७ वा० ६ अ
स्त्रद्वयकलेकैकरणे द्वासप्ततिरंगुल० ७२ पत्राग्रवक्रतायामनु तावत्येव भूस्पृक्पतेत तावत्येव स[illegible]यत
इति गणितं क्षेत्रफलमवहितमष्टानामपि पत्राणां क्षेत्रफलमेलने गुलानि षट्सप्तत्यधिकापञ्चसती

शिव:
१२

द्वयं२

अथाष्टास्रम् इष्टचतुरस्रे चतुर्विंशतिभागाः तत्र द्वाभ्यां भागाभ्यामेकभागचतुर्थांशाधिकाभ्यां
मध्यसूत्रं संवर्ग्य मध्यात्कोणं तद्धृतकर्कटेन इतरेतरचेशानद्वीन्तरालमारभ्यैकादशभिरंशैर्मि
तेन सूत्रेण गणष्टसु स्थानेष्वंकिते अष्टास्रं भवति अत्र चैकादशांशाः स्वाष्टमांशोनदृका
र्ण्याः अत्रैकहस्तादावुपपत्तिः मध्यसमचतुरस्रं तद्भुजमानन्तु विंशत्यंगुलम् एको यवो यूका
त्रयम् चतुरस्रचतुर्भागेषु चत्वारि शतत्र्यस्राणि तत्र भुजश्चतुरस्रभुजाष्टमेषूर्वोक्तोऽकसू
त्रमितावेव द्वौ भुजौ लम्बानान्तु चत्वार्यङ्गुलानि एको यवो द्वयूके इति तत्र चतुरस्रफलं
चत्वारिंशच्छतानि ४० सप्तचांगुलानि ७ यवाश्च सप्त ७ प्रत्येकं त्र्यस्रफलम् द्विचत्वारिंशदंगुला
नि ४२ त्र्यस्रचतुष्टयफलम् अष्टषष्ट्यधिकशतम् १६८ रामोक्तं चाष्टास्रम् विषमवक्रभु
जत्वात् षोडशास्रतापत्तेश्चोपेक्ष्यमिति दिक् अष्टाद्विभुजांगुलानि एकस्मिन्दशांगुलानि
सप्तयवाः द्वयोः पंचदशांगुलानि त्रयो यवाः त्रिष्वष्टादशांगुलानि सप्तयवाः चतुर्ष्वेकवि
शत्यंगुलानि सप्तयवाः पञ्चसु चतुर्विंशत्यंगुलानि यवत्रयम् षट्सु षड्विंशत्यंगुलानि ष
ड्यवाः सप्तस्वष्टाविंशत्यंगुलानि सप्तयवाः अष्टसु त्रिंशदंगुलानि सप्तयवाः नवसु द्वात्रिं
शदंगुलानि षड्यवाः दशसु चतुस्त्रिंशदंगुलानि यवचतुष्टयम् षोडशसु त्रिचत्वारिंशदं
गुलानि पञ्चयवाः अथ चतुर्विंशांशाः एकस्मिन्नेकांगुलम् द्वयोरेकांगुलम् त्रयो यवाः
त्रिष्वप्येकांगुलम् षड्यवाः चतुर्ष्वंगुलद्वयम् पञ्चस्वंगुलद्वयम् षट्स्वंगुलद्वयम् यवत्रयम्

राम:
१२

सप्तस्वंगुलद्वयम् पञ्चयवाः अष्टस्वंगुलद्वयं षट्यवाः नवस्वंगुलत्रयम् दशस्वंगुलत्रयम् एकोय
वः षोडशसु चत्वार्यंगुलानि एकहस्तादिषु चतुर्थांशाः एकस्मिन् षडंगुलानि द्वयोरष्टांगु
लानि चत्वारो यवाः त्रिषु दशांगुलानि यवत्रयम् यूकाश्चतस्रः चतुर्षु द्वादशांगुलानि पं
चसु त्रयोदशांगुलानि त्रयो यवाः यूकाश्चतस्रः षट्सु चतुर्दशांगुलानि षट् यवाः सप्तसु
पञ्चदशांगुलानि सप्त यवाः अष्टसु षोडशांगुलानि सप्त यवाः चत्वारो यूकाः नवस्वष्टाद
शांगुलानि दशस्वष्टादशांगुलानि सप्त यवाः षट् यूकाः षोडशसु चतुर्विंशत्यंगुलानि
अथाष्टमांशाः एकस्मिन्नंगुलत्रयम् द्वयोश्चत्वार्यंगुलानि द्वौ यवौ त्रिषु पञ्चांगुलानि
द्वौ यवौ चतुर्षु षडंगुलानि पञ्चसु षडंगुलानि षट् यवाः षट्सु सप्तांगुलानि यवत्रयम्
सप्तस्वष्टांगुलानि अष्टस्वष्टांगुलानि यवचतुष्कम् नवसु नवांगुलानि दशसु नवांगुला
नि चत्वारो यवाः षोडशसु द्वादशांगुलानि अथ षष्ठांशाः एकस्मिन्नंगुलचतुष्टयम्
द्वयोः पञ्चांगुलानि पञ्च यवाः तिस्रो यूकाः त्रिषु षडंगुलानि सप्त यवाः चतस्रो यूकाः
चतुर्ष्वष्टांगुलानि पञ्चस्वष्टांगुलानि सप्त यवाः पञ्च यूकाः षट्सु नवांगुलानि षट् य
वाः चतस्रो यूकाः सप्तसु दशांगुलानि चत्वारो यवाः पञ्च यूकाः अष्टस्वेकादशांगु
लानि द्वौ यवौ चतस्रो यूकाः नवसु द्वादशांगुलानि दशसु द्वादशांगुलानि पञ्च यवाः
षोडशसु षोडशांगुलानि अथ द्वादशांशाः एकस्मिन्नंगुलद्वयम् द्वयोर्द्व्यंगुले

सप्तयवाः त्रिष्वंगुलत्रयम् यवचतुष्टयम् चतुर्षु चत्वार्यंगुलानि पञ्चसु चत्वार्यंगुलानि
चत्वारो यवाः षट्सु चत्वार्यंगुलानि सप्तयवाः सप्तसु पञ्चांगुलानि द्वौ यवौ अष्टसु पं
चांगुलानि पञ्चयवाः नवसु षडंगुलानि दशसु षडंगुलानि यवत्रयम् षोडशस्वष्टांगु
लानि स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिद इति उक्तत्वात्सर्वेषु चैतेषु प्रोक्तमानाद
र्धांगुलयवादिन्यूनमतिरिक्तं वा कृत्वा ध्वजायः साधनीयः विस्तारादैर्घ्ये गुणितेऽष्टभि
र्विभक्ते यच्छेषं परिशिष्यते तदा ध्वजायेति तदुक्तम् ध्वजो धूम्रोऽथ सिंहश्च स्वा रभ
यः खरो गजः ध्वांक्षश्चेति क्रमेणोक्ता दायाष्टकमुदाहृतमिति भविष्यपुराणे मुष्टि
मानशतार्द्धं तु शतेऽरत्निमात्रकम् सहस्रे च यहोतव्यं कुर्यात्कुण्डं करात्मकम् द्विहस्तमयुते तद्वल्लक्षहोमे
चतुष्करम् अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिकमिति यन्तु शारदातिलके एकहस्तमितं कुण्डमेक
लक्षे विधीयते लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत् दशहस्तमितं कुण्डं कोटिहोमे पिशस्यते इ
ति यत्तु स्कान्दे कोटिहोमे चतुर्हस्तं चतुरस्रं समन्ततः योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलमिति च
तुर्लक्षादिहोमेष्वेकहस्तादिकुण्डविधानम् कोटिहोमे दशहस्तस्यैतद्यथोचितं व्रीह्यादिचिरदाहिस्थूल
द्रव्यविषयम् घृतादिक्षिप्रदाहिद्रव्यविषयं चैतेयम् अथ खातमाह चूडामणौ चतुर्विंशतिमं भागमंगुलं
परिकल्पयेत् चतुर्विंशांगुलहस्तं कुण्डानां परिकल्पयेत् हस्तमात्रं खनेत्तिर्यगूर्ध्वं मेखलया सह पिंगल
मते खातादेकांगुलत्यक्ता मेखला नास्थितिर्भवेत् तथा सर्वेषामेव कुण्डानां मेखलानि स्यु एव वा

कुण्डलक्ष्मविस्तृतो कण्ठाङ्गुलाद्धिः स्ङ्कार्य्यामेखलेकाषडंगुलेनि चतुस्त्रिद्व्यंगुलावापितिस्त्रः सर्वत्रणोमना
कृति मेखलात्रितयंकार्य्यंकोणागमा यमांगुलेरिति कोणाश्चत्वारः रामस्त्रयः यमाद्वौ चतुस्त्रि
द्व्यंगुलेत्वेचविस्तारेउच्चतायांच अतएवशारदातिलके मेखलामानंप्रकल्प्यविस्तारोत्सेधतोज्ञेया
मेखलाः सर्वतोबुधैरिति रामेणानुतिसृणामंगुलोच्चतेवविस्तारस्तुचतुस्त्रिद्व्यंगुलइत्युक्तम्
अथयोनिः तत्रस्वायंभुवे मेखलामध्यतोयोनिः कुण्डार्द्धंत्र्यंशविस्तृता अंगुष्ठमानोष्ठकं
ठोकार्य्याश्वत्थदलाकृतिः कुण्डार्द्धदीर्घात्र्यंशविस्तृता मूलेऽग्रेऽश्वत्थदलवत्कुञ्चिता
अंगुष्ठमानोऽप्योष्ठकण्ठायस्याः सांगुष्ठमानोष्ठकण्ठ ओष्ठः कुण्डमध्यप्रविष्टयोन्य
ग्रम् कण्ठयोनिमेखलेत्येके तथाच भुविवेष्टितायोनिः कार्य्येत्यर्थः मेखलातभागद्व
त्यपरे त्रैलोक्यसागरे दैर्घ्यान्तर्य्यांगुलायोनि स्त्र्यंशोना विस्तरेणतु एकांगुलोच्छ्रितासा
तुप्रविष्टाभ्यन्तरेतथा कुंभद्वयसमायुक्ताश्वत्थदलवन्मता अंगुष्ठमेखलायुक्तामध्य
त्वाज्यधृतिक्षमेति त्र्यंशोनायोनिर्दैर्घ्यात् अर्कांगुलेतियावत् कुंभद्वयेनवृत्ताद्धद्वया
कारेणमूलदेशेसमायुक्ता शारदातिलके स्थलादारभ्य नालंस्यादोष्ठान्यामध्येसरन्ध्रक
मिति प्रागग्नियाम्यकुण्डानांप्रोक्तायोनिरुदङ्मुखी पूर्वामुखास्मृताशेषायथाशोभा
समन्विताः प्रागग्नियाम्यकुण्डावर्गीति पूर्वोक्तिः स्वायंभुववचनात् योनिकुंडयोनिर्न्नका
र्य्येतिकेचित् वस्तुतस्तु नवानामपिचतुरस्रादिपक्षेप्येतस्यसावकाशत्वात् विशेषविरोधाच्च

योनिर्नैव कार्य्येति त्रैलोक्यसागरे नवमस्यापि कुण्डस्य योनिर्दक्षदले स्थितेति दक्षस्यापूर्वया स्यमु
जलस्थापश्चिमोत्तरे दक्षं दक्षिणं जलं पश्चि एवं च होतारोपि पूर्वदक्षिणकुण्डयोरुत्तराभिमु
खाः पश्चिमोत्तरयोः पूर्वाभिमुखाः सिद्ध्यन्ति होतुरग्रे योनिरासामुपर्य्यश्वत्थपत्रवदिति तत्रैवोक्तेः
आसां मेखलानामुपरीत्यर्थः एवमेव रूपनारायणादयः शारदायाम् योनिकुण्डे योनिं पद्म
कुण्डे नाभिं वर्जयेदिति सिद्धान्तशेखरे योनौ योनिं न कुर्वीतेति शारदातिलके कुण्डानां कल्पये
दन्तर्नाभिमम्बुजसन्निभां तत्तत्कुण्डानुरूपं वा मानमस्या निगद्यते मुष्टिरत्नेक हस्तानां नाभि
रुत्सेधनोमता नेत्रवेदांगुलोपेता कुण्डेष्वन्येषु वर्द्धयेत् यवद्वयक्रमेणैव नाभिं धर्यगुदारधीः
पूर्वोद्धियवद्धिस्तु विस्तरायामयोः चतुरंगुलत्यर्थः द्वित्रिहस्तादिकुण्डे
शारदातिलके एकमेव भवेत्कुण्डमीशान्यां वेदमवा ध्वरैतिविश्वकर्म्मा खाताधिके भवेद्रोगी
हीने धेनुधनक्षयः वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले मेखलारहिते शोकोभ्यधिके
वित्तसंक्षयः भार्याविनाशनं प्रोक्तं कुण्डं योन्या विनाकृते अपत्यध्वंसनं प्रोक्तं कुण्डं य
त्कण्ठवर्जितम् इति सिद्धान्तशेखरे मानहीने महाव्याधिरधिके शत्रुवर्द्धनम् योनिहीने त्व
पस्मारो वाकूटः कण्ठवर्जितेति तत्रैव स्थण्डिलं वापि कुर्वीत सुसिद्धं सिकतैः सितैः हस्तमात्रं प्रवि
स्तारं सुसमं त्र्यंगुलोन्नतम् ग्रन्थान्तरेपि नित्ये नैमित्तिके होमे स्थण्डिले वा समाचरेत् हस्त

१५

मात्रेणानन्कुर्य्याद्वालुकाभिः सुशोभनम् अंगुलोत्सेधसंयुक्तं चतुरस्रं समंततः इति ॥ इति श्रीशंकरभट्टात्मजनीलकण्ठकृतः कुण्डमण्डपनिर्णयः ॥ सं० १९०१ पोषशुक्लद्विती॰ मं॰

